# संस्कृत-वार्ताः

**दिनाङ्कः - 22-11-2020** **प्रातः - 06: 55**

**मुख्य-वार्ताः**

- प्रधानमन्त्री नरेन्द्रमोदी न्यगादीत् यत् कोरोनावैश्विकमहामारी मानवतायाः इतिहासस्य सर्वथा बृहत्तमम् आह्वानं वर्तते।
- प्रधानमन्त्री अवादीत् - भारतीयोर्जायाः क्षेत्रे विकासस्य उद्यमितायाः वृत्तेश्च अनन्तसम्भावनाः।
- भारतेन नगरोटा-आतंकि-संघर्ष प्रकरणे पाकिस्तानस्य उच्चायोग: दृढं परिपृष्ट:।
- राष्ट्रे कोरोणात: स्वस्थतामिति: त्रि-णवति-दशमलव षट्-सप्त परिमिता संवृत्ता।
- अद्य टेनिसक्रीडायां विश्वस्य तृतीयवरीयताप्राप्तः डोमिनिक् थीमः डेनिल मेडवेडीवेन सह निर्णायक स्पर्धायां क्रीडिष्यति।

**कोविड आपनिंग**

कोरोणामहामार्या: विरुद्धं देश: ऐक्यभावनया युद्धयति। भवन्तोऽपि अस्माभि: सह सुरक्षाया: उपायत्रयस्य सङ्ल्पंक स्वीकुर्वन्तु

**मुखावरंक सन्धारयन्तु**

**सामाजिकदौर्यं परिपालयन्तु,**

**पाणिपादं च यथासमयं प्रक्षालयन्तु।**

**जी-20**

प्रधानमन्त्री नरेन्द्रमोदी न्यगादीत् यत् कोरोनावैश्विकमहामारी मानवतायाः इतिहासस्य सर्वथा बृहत्तमम् आह्वानं वर्तते। द्वितीय-विश्वयुद्धस्य पश्चात् एषा महद् विपद् अस्ति सम्पूर्णं विश्वं प्रत्यक्षीकरोति। दृश्यश्रव्यमाध्यमैः जी-20 सम्मेलने भाषमाणः प्रधानमन्त्री उक्तवक्तव्यं प्राकाशयत्।

प्रधानमन्त्रिणा कोरोनामहामार्याः पश्चात् चतुर्ण्णां मुख्यविषयाणाम् उपरि कार्यं कर्तुं विशेषेण उक्तं ते च

- प्रतिभायाः कृते क्षेत्राणां विस्तारः भवेत्
- इदं सुनिश्चितं भवेत् यत् प्रविधिः समाजस्य प्रत्येकं प्रभागं प्राप्येत।
- प्रशासन व्यवस्थासु पारदर्शिता अपि च प्रकृतेः संरक्षणं सुनिश्चितं भवेत्।

**प्रधानमन्त्रिण**

प्रधानमन्त्रिणा अभाषि यत् कोरोनामहामार्याः कारणेन विश्वस्य ऊर्जायाः क्षेत्रे व्यापकपरिवर्तनानि दृश्यन्ते। अनेन भारतीयोर्जायाः क्षेत्रे विकासः उद्यमिता वृत्तेः च व्यापकावसराः उत्पन्नाः भविष्यन्ति। अद्य गुजरातस्य गान्धीनगरे पण्डितदीनदयालपेट्रोलियमविश्वविद्यालयस्य अष्टमं दीक्षान्तसमारोहं दृश्यश्रव्यमाध्यमेन संबोधयन् श्रीमोदी अवदत् यत् भारतं स्वस्य कौकिलीयोत्सर्जनस्य प्रतिशततायां त्रिंशत्तः पञ्चत्रिंशत् प्रतिशतम् यावत् न्यूनीकरणस्य लक्ष्यं समाधातुम् अग्रे वर्धते। श्रीमोदिना उक्तं यत् कोरोनाकाले उपाधिप्राप्तिः विद्यार्थिनां कृते आह्वानं वर्तते परंतु अस्माकं विद्यार्थिनां योग्यताः एतस्मात् वैश्विकाह्वाहनात् महत्यः वर्तन्ते। प्रधानमन्त्री विद्यार्थिनः प्रति अवोचत् यत् ते स्वकीयोत्तरदायित्वभावनाः नवीनावसरेषु परिवर्तयंतु। श्रीमोदी अवादीत् यत् विश्वं भारतं प्रति आशापेक्षया पश्यति। असौ अवोचत् यत् अनुसन्धानत: उत्पादनक्षेत्राणि यावत् युवभ्य: अवसरा: एव अवसरा: सन्ति।

**भारत-पाकिस्तानम्**

भारतेन पाकिस्तानं प्रति जैश-ए-मोहम्मद इत्यस्य द्वारा आतकंवादि-आक्रमणयोजनामालक्ष्य स्वकीया दृढ़प्रतिक्रिया प्रदर्शिता। भारतीय विदेशमन्त्रालयेन पाकिस्तानस्य सम्बन्धिताधिकारी दृढ़शब्दै: ज्ञापित: यत् एतादृशस्य कृत्यस्य सर्वथा विरोध: कर्त्तव्य:। सममेव मन्त्रालयेन इदमपि निगदितं यत् पाकिस्तानं स्वभूमौ

आतकंवादिनां परिपालनं निरोधेत् अपि च तेषां निर्मितानां प्रशिक्षणकेन्द्राणां नष्टीकरणं भवेत्। भारतेन दृढशब्दैः भाषितं यत् वयं स्वकीयदेशम् आतकंवादात् रक्षितुं यथानिश्चितं पदक्रमान् विधातुं सक्षमा: स्म:।

**कोरोना**

देशे कोरोणा-महामार्या: द्वा-त्रिंशदुत्तर-द्वि-शताधिक-षट् चत्वारिंशत् सहस्रं नवानि प्रकरणानि पुष्टिंगतानि। एवं अद्यावधि आहत्य अष्ट-नवत्युत्तर-पंच-शताधिक-पञाशत् सहस्रोत्तर-नवति-लक्षमितानि विषाणो: प्रकरणानि समंकितानि। विगतासु चतुर्विंशति-होरासु भारते चतु: षष्ट्यधिक-पञ्चशतं संक्रमण-ग्रस्ता: जना: परलोकं गता:। इत्थं मृतकाश्च संवृत्ता: षड्-विंशत्युत्तर-सप्तशताधिक-द्वा-त्रिंशत् सहस्रोत्तर-शतं प्रपीड़िता:। स्वास्थ्य-मन्त्रालयानुसारि संक्रमणस्य सक्रिय-प्रकरणानि सन्ति भूयोपि सप्त-शताधिक-ऊन-चत्वारिशंत् सहस्रोत्तर-चतुर्लक्षमितानि। चिकित्सावकाशं गतानां संख्या चतुर्विंशत्युत्तर-शताधिक-अष्ट सप्तति-सहस्रोत्तर-चतुरशीति लक्षमिता संजाता। स्वस्थतामिति: देशे त्रि-णवति दशमलव षट्-सप्त परिमिता वर्तते।

**हिमाचल प्रदेश**

हिमाचलप्रदेशे प्रशासन द्वारा निगदितमस्ति यत् शिमलाजिलायां रविवासरे समस्तापणापिधानं भविष्यति। कोरोना प्रकरणेषु तीव्रगत्या वृद्धेः कारणात् अयं

निर्णयः स्वीकृतः अस्ति। भोज्यवस्तु-औषधापणानि विहाय समस्तानि आपणानि पिहितानि भविष्यन्ति।

**टेनिस**

अद्य टेनिसक्रीडायां विश्वस्य तृतीयवरीयताप्राप्तः डोमिनिक् थीमः डेनिल मेडवेडीवेन सह निर्णायक स्पर्धायां क्रीडिष्यति। थीमः नोवाकजोकोविचं पराजित्य निर्णायक स्पर्धायां प्रविष्टवान् अस्ति। तत्रैव डेनिल-मेडवेडीवः राफेल नाडालं पराजित्य निर्णायक स्पर्धायां प्रविष्टः अस्ति।